ॐ नमः काल्यै ।

# अद्वैतभावनोपनिषत्

अद्वैतभावनां वक्ष्ये शृणुष्व कमलानने ।
यस्य विज्ञानमात्रेण भवेद्गङ्गाधरः स्वयम् ॥

अहं स्त्री । पुरुषोऽहम् । सदाशिवोऽहम् । परमप्रकृत्यो[तिर]ऽहम् । परमपुरुषो-ऽहम् । नादोऽहम् । विन्दुरहम् । कलाश्चाहम् । शब्दब्रह्माहम् । क्रियायोगो-ऽहम् । ब्रह्माहम् । विष्णुरहम् । सौरोऽहम् । ब्राह्मोऽहम् । वैष्णवोऽहम् । शिवा-ऽहम् । नानाशास्त्रमहम् । असुरोऽहम् । सुरोऽहम् । उच्चाररहितोऽहम् । विद्याऽहम् । वेदाश्चाहम् । वेदशाखिन (वेदसाक्षिण)श्चाहम् । वेदक्रियाऽहम् । कर्म्मयोगोऽहम् । धर्म्मकर्म्माऽहम् । पिताऽहम् । माताऽहम् । पुत्रोऽहम् । गुरुरहम् । आचार्य्योऽहम् । आगमोऽहम् । रामायणोऽहम् । महाभागवतोऽहम् । महाभारतोऽहम् । श्रीभाग-वतोऽहम् । श्रुतिशास्त्राण्यहम् । मन्त्रोऽहम् । मन्त्रार्थोऽहम् । स्तवोऽहम् । कवचो-ऽहम् । अहं सहस्रनामानि । अहं गायत्री । बीजान्यहम् । कूटाक्षरोऽहम् । त्र्यक्षरोऽहम् । पञ्चाशन्मातृकाऽहम् । पञ्चभूतान्यहम् । पञ्चमहाभूतान्यहम् । तत्त्वा-न्यहम् । स्थूलोऽहम् । सूक्ष्मोऽहम् । कुलाकुलाश्चाऽहम् । कुलाचलश्चाऽहम् । प्रमाणादि षोडशपदार्थोऽहम् । ऋषयश्चाऽहम् । मुनयश्चाऽहम् । लक्ष्मीरहम् । स्त्रियोऽहम् । श्रियोऽहम् । प्रियोऽहम् । गौर्य्यहम् । भूतोऽहम् । कुष्माण्डोऽहम् । प्रेतोऽहम् । लोकपालाश्चाऽहम् । ग्रहाश्चाऽहम् । दिग्गजाश्चाऽहम् । दशदिशोऽहम् । ऊर्द्ध्वोऽहम् । अधोऽहम् । चतुर्द्दशभुवनान्यहम् । तत्स्थोऽहम् । तदसंप्रदर्शाश्चानन्तरम् । तदहं संप्रकुर्य्यात् ।

जपेन्मन्त्रं विधानेन संख्यां कुर्वन् विधानतः ।
न दोषो मानसे जापे इत्याह भगवान् शिवः ॥

इति सदाशिवप्रणीतं अद्वैतभावं समाप्तम् ।

---

( क )

अथातो धर्म्मजिज्ञासा। ज्ञानं बुद्धिश्च। ज्ञानं मोक्षस्य कारणम्। मोक्षात् सर्व्वज्ञता बुद्धिः। प्रपञ्चेश्वरः। पञ्च विषयाः प्रपञ्चाः पञ्चमकाराः। तेषां ज्ञान-स्वरूपाः। योगो मोक्षः। कुलधर्म्मकरणं ज्ञानम्। अनित्यज्ञानम्। ज्ञाने धर्म्मः। एषा मोक्ष इत्यध्यात्मः। सर्व्वेन्द्रियाणां नयनप्रधानम्। अधर्म्मविहिता न कार्य्या धर्म्मः शाम्भवम्। आत्मनोऽनिन्दा। गुरुरेकः सर्व्वत्रैकता। बुद्धिर्मतिमता प्रकाव्यां (प्राकाव्य') न कुर्य्यात्। पशुभाषणं। अन्यायो न्यायः। किमपि आत्मरहस्यं न वदेत् शिष्याय वदेत्। अन्तः शाक्तः। वहिः शैवः। लोके न निन्दात्। लोके वैष्णवः। कौलं न निन्दात्। प्रकाव्ये न निरयः। न तिष्ठेत्। नियमेन नियमान्न मोक्षः। एतज्ज्ञा[ज्ञा]नं व्रतञ्चरेत्। कौलं प्रतिष्ठां कुर्य्यात्। निःसङ्ग एव भवेदित्याध्यात्मम्। अनित्यकर्म्मलोपः। मपञ्चमलाभे क्रमं कुर्य्यात्। अत्र शान्तिप्रधानम्। सर्व्वत्र निर्भयता फलमात्मा लतारूपम्। शान्तिषु निष्ठुरतां न कुर्य्यात्। न स्वेच्छया पञ्चमं स्वीकुर्य्यात्। कुलभ्रष्टं न सम्भाषयेत्। वीरस्त्रियमनिच्छाया न रमेत्। स्त्रियं न हन्यात् एतास्तु जपेत् प्रातरुत्थाय देशिकः। तस्याज्ञासिद्धिर्भवति। इति पूजां कुर्व्वन्ति दिव्यन्ते नन्दने वने।

इति सदाशिवप्रणीता कौलोपनिषत्

समाप्ता।

---